**Samata Edition**

# Complete Works of Sri Sankaracharya

*in the Original Sanskrit*

**Volume 1**
STOTRAS

**Volume 2**
PRAKARANA PRABANDHAVALI

**Volume 3**
UPADESA RACHANAVALI

**Volume 4**
PRAPANCHASARA

**Volume 5**
LAGHU BHASHYAS

**Volume 6**
GITA BHASHYA

**Volume 7**
BRAHMA SUTRA BHASHYA

**Volume 8**
COMMENTARIES ON SHORT UPANISHADS

**Volume 9**
COMMENTARY ON CHANDOGYA UPANISHAD

**Volume 10**
COMMENTARY ON BRIHADARANYAKA UPANISHAD

ॐ

श्रीशांकरग्रंथावलिः

# COMPLETE WORKS
# of
# SRI SANKARACHARYA

*in the original Sanskrit*

72402




VOLUME

X

**BRIHADARANYAKOPANISHAD**

**BHASHYA**

Sa2BL
San/Sac

SAMATA BOOKS
Madras

BRIHADARANYAKOPANISHAD
BHASHYA

First Published 1910
Samata Revised Edition 1983

Ten-volume Samata Edition of
the Complete Works of Sri Sankaracharya
Price of Full set: Rs. 1000/-

अवाप्ति संख्या 7240 दिनांक 24.2.86
निर्देश संख्या Sa2Bh
नई दिल्ली Sac
केन्द्रीय पुरातत्व पुस्तकालय

© V. Sadanand–1983

Published by V. Sadanand, Samata Books
10 Kamaraj Bhavan, 573 Mount Road, Madras-600 006 India
Printed at All India Press, Pondicherry, India
PRINTED IN INDIA

# PREFACE

The publication of this, the concluding volume of the COMPLETE WORKS OF SRI SANKARACHARYA coincides with GURU PURNIMA, the sacred day of self-consecration to the Divine and the Divine in the Guru and it is more than a coincidence.

It was nearly twenty-one months ago that this publication commenced on October 26, 1981 with the Blessings of Sri Abhinava Vidya Tirtha Swami and of Sri Bharati Tirtha Swami of Sri Sarada Pitham, Sringeri. It was explained in Volume one how I was led to undertake this great task of making the Sankara Granthavali available to the world after more than seven decades.

The prospects of fulfilling this task seemed encircled with gloom when Sri Abhinava Vidyatirtha Mahasannidhanam made it possible for me by his Benediction to place the COMPLETE WORKS OF SRI SANKARACHARYA in the hands of the Jagadgurus and in the hands of the subscribers, whom I thank for their patience. I take this opportunity to thank Dharmatma V. Vaidyasubramania Iyer and Sri K. R. Ramachandran for their advice and help all along.

The 10-volume Samata Edition is not a mere reproduction of the 20-volume Edition of THE WORKS OF SRI SANKARACHARYA published in 1910. The texts of the original edition have been rearranged in the Samata Revised Edition, which also incorporates the Commentary of Sri Sankaracharya on Adhyatma Patala of Apastamba Dharma Sutra that was discovered only after the original edition came out. Thus the first four volumes of the present

edition consist of the original writings of the Master while the last six volumes consist of his commentaries which have brought him fame as BHASHYAKARA. Perceptive readers may discover the great Acharya to be a rare Poet and versatile master of Sanskrit no less than the thinker and the philosopher, the Yogi and the Jnani, the Seer and the Mystic.

This edition, though announced originally in 13 volumes, has been issued in ten volumes without affecting the text in any way and it runs to 6,446 pages.

I wish to thank the Staff and Management of All India Press who have identified themselves with this work imparting to it a touch of excellence.

And I thank one who has been an intimate friend and like an elder brother for all that he has done and continues to do despite my shortcomings.

Sri Sankaracharya is the most misunderstood philosopher. I trust this edition of his COMPLETE WORKS will inspire earnest readers and seekers to go behind the words into the spirit of his teaching illumining our minds and hearts.

May the Master awaken us to the Self and lead us to the Supreme Realization as we adore him to-day.

Guru Purnima
July 24, 1983

V. SADANAND



## ।। श्री शृङ्गेरी श्रीजगद्गुरुमहासंस्थानम् ।।

श्रीमत्परमहंसपरिव्राजकाचार्यवर्य पदवाक्यप्रमाणपारावारपारीण यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाध्यष्टाङ्गयोगानुष्ठाननिष्ठ तपश्चक्रवर्त्यनाद्यविच्छिन्न श्रीशङ्कराचार्य गुरुपरम्पराप्राप्तषड्दर्शनस्थापनाचार्य व्याख्यानसिंहासनाधीश्वर सकलनिगमागमसारहृदय सांख्यत्रयप्रतिपादक वैदिकमार्गप्रवर्तक सर्वतन्त्रस्वतन्त्रादिराजधानीविद्यानगरमहाराजधानीकर्णाटकसिंहासनप्रतिष्ठापनाचार्य श्रीमद्राजाधिराजगुरुभूमण्डलाचार्य ऋष्यशृङ्गपुरवराधीश्वर तुङ्गभद्रातीरवासि श्रीमद्विद्याशङ्करपादपद्माराधक श्रीजगद्गुरु श्रीचन्द्रशेखरभारतीस्वामिगुरुकरकमलसञ्जात

### ।। श्रीजगद्गुरु शृङ्गेरी श्रीमदभिनवविद्यातीर्थस्वामिभिः ।।

अस्मदत्यन्तप्रियशिष्य वेलूरि सदानन्द शर्मविषये नारायणस्मरणपुरस्सरं विरचिता आशिषस्समुल्लसन्तु ।

सर्वतन्त्रस्वतन्त्राः श्रीमच्छंकरभगवत्पादाचार्याः संसाराम्बुधिमग्नानां लोकानां समुद्धरणाय सनातनवैदिकधर्मं सर्वत्र प्रचार्य

प्रस्थानत्रयभाष्यप्रमुखान् ग्रन्थतल्लजान् विलिख्य दिगन्त-विश्रान्तयशःप्रसरा विरेजिरे।

भगवत्पादविरचितास्समेपि ग्रन्थाः नैकेनापि प्राकाश्यं नीता इति हेतोः अस्मत्परमगुरुचरणैराज्ञप्ताः श्री टि के बाल-सुब्रह्मण्यार्याः श्रीरङ्गस्थ स्वीय वाणीविलासमुद्रणालये वर्षाणां सप्तत्याः प्राक् शांकरग्रन्थावली नाम्ना सर्वानपि तान् ग्रन्थान् प्राकाशयन् ।

अधुना पुनस्तेषां ग्रन्थानां दौर्लभ्यमाकलय्य भवान् तानेव पुनः प्रकाशयितुमिच्छतीति विदित्वा मोदामहे वयम् ।

आशास्महे च भवदीयोयमुद्यमः क्षिप्रमेव साफल्यमेतु लोकाः भगवत्पादीयान् ग्रन्थानधीत्य औपनिषदं तत्त्वं यथावदवबुध्य कृतार्था भूयासुरिति ।

इति नारायणस्मरणम्

श्रृङ्गगिरिः
दुर्मति चैत्र शुक्ल अष्टमी
रविवासरः
१२-४-१९८१



नानाजन्मसु संचितेन तपसा पूतेन चित्तात्मना
मित्रेण प्रतिबोधितेन कुतुकात्सर्वाः कृतीः शांकरीः ।
संमुद्रच्य प्रथमं जगद्गुरुपदे भक्त्या मयाद्यार्पिताः
स्वीकृत्योपहृतिं करोतु गुरुराड् धन्यं तथेमं जनम् ।।

श्रीमच्छंकरदेशिकेन्द्ररचितान्सर्वान्प्रबन्धान्मुदा
तत्प्रीत्यै परिशोध्य पुस्तकचयैः संमुद्रच्य साकं बुधैः ।
तच्छात्रप्रवरालिमध्यविलसच्छ्रीदेशिकेन्द्रेषु ता-
न्कृत्वाद्योपहृतिं सभक्तिविनयं नूनं कृतार्थोऽस्म्यहम् ।।

सौम्याब्दमाघार्जुनपक्षराजत्सूर्याङ्कतिथ्याश्रितसोमवारे ।
श्रीशंकरार्यप्रतिमाप्रतिष्ठाकाले मयैषोपहृतिर्व्यधायि ।।

श्रीशंकरकृतिमाला गुरुवरतुष्ट्यै समर्पिता मोदात् ।
बालादिमपदभाजा सुब्रह्मण्येन भक्तिनम्रेण ।। ४ ।।

# संप्रदाय परंपरा श्लोकानि

ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्यासंप्रदायकर्तृभ्यो वंशऋषिभ्यो महद्भ्यो नमो गुरुभ्यः । सर्वोपप्लवरहितः प्रज्ञानघनः प्रत्यगर्थो ब्रह्मैवाहमस्मि ॥ १ ॥

ॐ नारायणं पद्मभवं वसिष्ठं शक्तिं च तत्पुत्रपराशरं च । व्यासं शुकं गौडपदं महान्तं गोविन्दयोगीन्द्रमथास्य शिष्यम् ॥ २ ॥

श्रीशंकराचार्यमथास्य पद्मपादं च हस्तामलकं च शिष्यम् । तं तोटकं वार्तिककारमन्यानस्मद्गुरून्संततमानतोऽस्मि ॥ ३ ॥

श्रुतिस्मृतिपुराणानामालयं करुणालयम् । नमामि भगवत्पादं शंकरं लोकशंकरम् ॥ ४ ॥

शंकरं शंकराचार्यं केशवं बादरायणम् । सूत्रभाष्यकृतौ वन्दे भगवन्तौ पुनः पुनः ॥ ५ ॥

ईश्वरो गुरुरात्मेति मूर्तिभेदविभागिने । व्योमवद्व्याप्तदेहाय दक्षिणामूर्तये नमः ॥ ६ ॥

ॐ

पूर्णमदः पूर्णमिदं
पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय
पूर्णमेवावशिष्यते ॥

---

ॐ शान्तिः शान्तिः शान्तिः ॥

# CONTENTS


| | PAGE. |
|---|---|
| BRIHADARANYAKOPANISHAD-BHASHYA . | 1—350 |
| CHAPTER I. . . . | 1 |
| CHAPTER II. . . . | 213 |
| BRIHADARANYAKOPANISHAD-BHASHYA. | 351—681 |
| CHAPTER III. . . . | 351 |
| CHAPTER IV. . . . | 491 |
| BRIHADARANYAKOPANISHAD BHASHYA— | 683-834 |
| CHAPTER V. . . . | 683 |
| CHAPTER VI. . . . . | 739 |

# विषयाः


| | | | पृष्ठम् |
|---|---|---|---|
| बृहदारण्यकोपनिषद्भाष्यम् | ... | | १—३५० |
| प्रथमोऽध्यायः | ... | .... | १ |
| द्वितीयोऽध्यायः | ... | ..... | २१३ |
| बृहदारण्यकोपनिषद्भाष्ये | | | ३५१—६८१ |
| तृतीयोऽध्यायः | ... | ... | ३५१ |
| चतुर्थोऽध्यायः | ... | ... | ४९१ |
| बृहदारण्यकोपनिषद्भाष्यम् | ... | | ६८३—८३४ |
| पञ्चमोऽध्यायः | .... | .... | ६८३ |
| षष्ठोऽध्यायः | .... | .... | ७३९ |

॥ श्रीः ॥

# ॥ विषयानुक्रमणिका ॥

**प्रथमाध्यायः** १—२१२

**उपोद्घातभाष्यम्** ... ३—८

मङ्गलाचरणम् ... ३

चिकीर्षितग्रन्थस्य प्रेक्षावत्प्रवृत्त्यौपयिकानुबन्धचतुष्टयसूचनपूर्वकं प्रधानभूतप्रयोजनस्य ग्रन्थनामव्युत्पादनद्वारा व्युत्पादनम् ... ३

कर्मज्ञानकाण्डयोः संबन्धं प्रतिज्ञाय तत्प्रतिपादनार्थं सिद्धे आत्मनि वेदान्तानां प्रामाण्यप्रसाधनम् ... ४

आविद्यकसंसारफलककर्मप्रतिपत्त्यर्थत्वात् कर्मकाण्डस्य कर्मफलाद्विरक्तस्य अविद्यानिवर्तकात्मज्ञानोत्पत्त्यर्थमुपनिषदारम्भः इति काण्डयोः संबन्धकथनम् ... ५

क्रतुप्रधानस्य अश्वमेधस्य उपास्तिसहितस्यापि संसारफलकत्वे, किमुतान्येषामिति बन्धहेतुकर्मभ्यो विरक्ताः ज्ञानापेक्षिणः तदुपाय एव श्रवणादौ सर्वकर्मसंन्यासपूर्वकं प्रवर्तेरन्निति आरम्भे अश्वमेधोपास्तिकथनमित्युपन्यासः ... ६

**प्रथमं ब्राह्मणम्** .... ८—१२

अश्वमेधाङ्गेषु प्रधानत्वादश्वस्य तस्य शिरआद्यवयवेषु उषःकालादिदृष्टिविधानम् ... ८

आश्वमेधिकमहिमाख्यग्रहादिषु अहरादिदृष्टिविधानम् ११

**द्वितीयं ब्राह्मणम्** ... १३—३३

वक्ष्यमाणमाश्वमेधिकाग्निदर्शनम् अग्नेः विशुद्धजन्मत्वादिना स्तोतुम् अग्नेरुत्पत्तिप्रतिपिपादयिषया असत्कारणवादनिराकरणपूर्वकं सत्कारणवादं प्रसाध्य अप्पर्यन्तप्रपञ्चसृष्ट्यभिधानम् ... १३

ततः विराड्रूपस्य अग्नेरुत्पत्तिकथनम् ... २२

आश्वमेधिकस्य अग्नेः शिरआद्यवयवेषु प्राचीदिगादिदृष्टिविधानम् ... २३

पूर्वं स्तुत्यर्थमुपपादितसृष्टिशेषोपन्यासः ... २५

अश्वाश्वमेधशब्दनिर्वचनपूर्वकम् अश्वमेधोपासनं विशिष्टं विधाय तस्य हिरण्यगर्भात्मकमृत्यवात्मभावप्राप्तिफलप्रदर्शनम् ... २८

**तृतीयं ब्राह्मणम्** ३४--७७

ज्ञानकर्मणोः फलनिरूपणानन्तरं तयोरुद्भावकस्य प्राणस्य स्वरूपं निरूपयितुमुत्तरब्राह्मणमिति संबन्धकथनपूर्वकं वृत्तिभेदेन देवासुरपदाभिधेयप्राजापत्यवागादिविषयाख्यायिकोपन्यासः ... ३४

प्राणोपासनवाक्यस्य अन्यशेषत्वशङ्कानिरासपूर्वकं विशु-
द्धत्वादिगुणविशिष्टप्राणोपासनविधिपरत्वप्रसाधनम्... ३७
औद्गात्रकरणार्थं देवैरर्थितानां वागाद्यभिमानिदेवतानां
तत्करणानन्तरं स्वाभाविकपाप्मासङ्गरूपमृत्युना परि-
भवोपन्यासः ... ४४
एवमेव देवैः प्रार्थितस्य मुख्यप्राणस्य विशुद्धत्वगुणमभि-
धाय तद्विशिष्टस्य मुख्यप्राणस्य उपासनविधानं तत्फ-
लप्रदर्शनं च ... ४८
उक्तविशुद्धत्वगुणस्य उपपत्तिनिरूपणमुखेन प्राणस्य व्या-
पकत्वगुणविधानम् ... ५१
प्राणस्य विशुद्धिरसिद्धेति शङ्कापरिहारेण दूर्गुणविधानम् ५२
प्राणात्मज्ञानकर्मफलस्य वागादीनामग्न्याद्यात्मत्वस्य निरू-
पणम् ... ५६
प्राणस्य भर्तृत्वश्रेष्ठत्वपुरोगन्तृत्वगुणविधानम् ... ५९
प्राणस्य ऋगाद्यात्मत्वगुणविधानम् ... ६४
प्राणस्य उद्गीथत्वात्मकगुणविधानम् ... ६७
सामात्मभूतस्य प्राणस्य स्वरसुवर्णप्रतिष्ठागुणविधानम्... ६९
एवं प्राणविज्ञानवतः अभ्यारोहमन्त्रजपकर्मविधानम्... ७२
कर्मवियुक्तस्य केवलस्य दर्शनस्यापि लोकजयादिफल-
प्रदर्शनम् ... ७६
विशुद्धत्वादिसमस्तगुणविशिष्टप्राणोपासनस्य एतत्फलमि-
ति प्रदर्शनम् ... ७६

**चतुर्थं ब्राह्मणम्** ७८—१६३

ज्ञानकर्मणोः स्तुत्यर्थं तत्फलभूतस्य प्रजापतेः जगत्सृष्ट्यादौ स्वातन्त्र्यविभूतिवर्णनेन फलोत्कर्षो वर्णयितव्यः इत्येतदर्थम् उत्तरग्रन्थारम्भः, उत्कृष्टफलस्य प्राजापत्यपदस्यापि भयारत्यादिश्रवणेन संसारत्वात् तत्रापि विरक्तस्यैव वक्ष्यमाणब्रह्मविद्यायामधिकारः इत्येतदर्थं च– इति पूर्वोत्तरग्रन्थसंबन्धकथनम् ... ७८

प्राजापत्यपदस्यापि संसारत्वमेव इत्यत्र गमकत्वेन प्रजापतेः भयारत्यादिवर्णनम् ... ८१

प्रजापतेः मनुशतरूपादिमिथुनभवनद्वारा मनुष्यादिप्रपञ्चसृष्टिकथनम् ... ८५

ब्राह्मणादिवर्णनियन्तृदेवतानामग्न्यादीनां ब्राह्मणादिवर्णानां सोमदेवत्यस्य आद्यवर्गस्य च सृष्टिकथनम् ... ८९

एवं ज्ञानकर्मलक्षणं प्रजापतित्वफलावसानं वैदिकं साधनं प्रदर्श्य, तस्य साध्यसाधनलक्षणस्य व्याकृतस्य जगतः व्याकरणात्प्राचीनबीजावस्था, समूलस्य संसारस्योद्धरणाय प्रदर्श्यते इति पूर्वोत्तरसंबन्धकथनम् ... ९४

बीजावस्थस्य जगतः अव्याकृतस्य नामरूपाभ्यां व्याकरणानन्तरं तस्मिन्व्याकृते परमात्मनः प्रवेशकथनम् ९५

व्यापकस्य परमात्मनः परिच्छिन्नवत् व्याकृते प्रपञ्चे प्रवेशो नोपपद्यते— इति आक्षेपपरम्पराप्रदर्शनम् ९८

जले सूर्यादिप्रतिबिम्बवत् बुद्धावुपलभ्यमानत्वमेव परमा-

त्मनः प्रवेशः इत्युपपादनम् ... १०२
आत्मनो देहे क्षुरधानस्थक्षुरवत् काष्ठादिस्थिताग्निवच्च सामान्यतो विशेषतश्च अवस्थितिकथनम् ... १०३
व्याकृताज्जगतः आत्मनः पृथक्करणाय प्राणनादिक्रियाविशिष्टात्मदर्शिनः अनात्मज्ञत्वमभिधाय प्राणनादिक्रियासंबन्धस्य औपाधिकत्वात् निरुपाधिकः परमात्मैव उपासितव्यः इति प्रतिपादनम् ... १०३
'आत्मेत्येवोपासीत' इति अपूर्वविधिः, ज्योतिष्टोमादिकर्मवत् आत्मोपासनस्य अत्यन्ताप्राप्तत्वात्— इति पक्षस्य प्रदर्शनम् ... १०६
आत्मसाक्षात्कारार्थमात्मोपासनविधिरयमिति पक्षान्तरोपपादनम् ... १०८
आत्मज्ञानातिरिक्तविधेयविषयस्याभावात् ज्ञानस्य च विध्यनर्हत्वात् नापूर्वविधिरिति प्रथमपक्षखण्डनम् ... १०८
साक्षात्कारार्थमात्मोपासनं विधेयमिति पक्षस्य अभ्युपगमवादेन परिहारमुक्त्वा अस्य विधेः नियमविधित्वोपपादनम् ... ११३
आत्मोपासनमेव यत्नेन कर्तव्यमित्यत्र उपपत्त्युपन्यासः ११५
आत्मतत्त्वस्य पुत्रादेः सर्वस्मात् प्रियतरत्वादपि ज्ञेयत्वोपपादनम् ... ११७
'आत्मेत्येवोपासीत' इति सूत्रितब्रह्मविद्यायाः विवक्षितप्रयोजनाभिधानाय उपोद्घातप्रदर्शनम् ... ११९

कीदृशं ब्रह्म वेद्यम्, कथं वा वेदनम् इत्यादिप्रश्नोपन्यासः ... १२०
'ब्रह्म वा इदमग्र आसीत्' इत्यत्र— ब्रह्मेति— अपरं ब्रह्म, ब्रह्मभावी ब्राह्मणो वा इत्यादिमतान्तरं प्रदर्श्य सर्वभावापत्तिफलस्यानित्यत्वदोषापत्त्यादिना परं ब्रह्मैवेति स्वमतोपन्यासः ... १२२
ब्रह्मभावी संसार्येव ब्रह्मशब्दार्थ इति प्रकारान्तरेण पूर्वपक्षमुपन्यस्य ब्रह्मोपदेशानर्थक्यप्रसङ्गादिना तत्परिहारः ... १२५
परं ब्रह्मैव अप्रतिबोधात् अब्रह्मत्वासर्वत्वादिकमध्यारोप्य परमदयालुना आचार्येण प्रतिबोधितं सत् अहं ब्रह्मास्मि इति आत्मानमेव विदित्वा अध्यारोपिताब्रह्मत्वादिनिवृत्त्या सर्वमभवत् इत्युपन्यासः ... १२९
कर्मवत् विद्या न साधनान्तरमपेक्षते फलं जनयितुम्— इत्येवम् 'तद्यो यो देवानाम्' इत्यादिवाक्यार्थोपन्यासः ... १३२
ब्रह्मविद्यायाः सर्वभावापत्तिः फलमित्यर्थस्य द्रढिम्ने वामदेवसार्वात्म्योपपादनम् ... १३३
अहं ब्रह्मास्मि— इति विज्ञातुः देवा अपि न ब्रह्मसर्वभावाभवनाय पर्याप्ताः, किमुतान्ये इत्यत्र 'आत्मा ह्येषां स भवति' इति हेतुप्रदर्शनम् ... १३४
आत्मव्यतिरिक्तदेवतोपासकस्य तत्त्वज्ञानाभावप्रतिपादनम् १४०

अविद्यावतां देवपशुत्वमुपपाद्य तान्प्रत्येव देवानां विघ्न-करणाद्यीशितृत्वोपन्यासः ... १४१

यं तु मुमोचयिषन्ति तं श्रद्धादिभिर्योक्ष्यन्ति, विपरीतमश्रद्धादिभिः, तस्मान्मुमुक्षुर्देवाराधनपरः श्रद्धाभक्तिपरः अप्रमादी स्यात् विद्याप्राप्तिं प्रति— इति प्रतिपादनम् ... १४२

अविदुषां पशुवत् देवपरतन्त्राणां देवादिकर्मकर्तव्यत्वे निमित्तभूतानां क्षत्रियादिवर्णानां धर्मस्य च सृष्टिकथनम् ... १४३

आत्मलोकमदृष्ट्वा मृतस्य आत्मनः सकाशाद्रक्षणाभावं वेदकृष्यादिदृष्टान्तकथनपूर्वकं प्रतिपाद्य आत्मलोकाज्ञानिकृतकर्मणः क्षयिष्णुत्वात् आत्मलोकस्यैव उपासनविधानम्, तथा आत्मलोकोपासकस्य कर्माभावादेव कर्मक्षयाभावप्रतिपादनम्, आत्मलोकं स्तोतुं फलवचनं च .... १४९

यैः कर्मभिः येषां देवादीनामुपकरोति अविद्वान्, तेषां कर्मणां तेषां देवादीनां च उपपादनम्, तदनुष्ठातुः तैः सर्वतः संरक्षणस्य च कथनम् ... १५५

ऐषणैव अविदुषः कर्मबन्धनाधिकारे प्रवर्तिका— इति प्रदर्शनम् ... १५७

आत्मनः जायादिभिः कृत्स्नतां संपादयितुमशक्तस्य तत्संपादनप्रकारप्रदर्शनम् ... १६१

**पञ्चमं ब्राह्मणम्** ... १६४—२०७

अविद्यायाः प्रस्तुतत्वात् तादृशाविद्यावतो गृहिणः जगतश्च परस्परं स्वकर्मोपार्जितत्वं प्रसाध्य तादृशाविद्वद्गृहिणा कर्मणा विज्ञानेन च सृष्टस्य जगतः सप्तधा प्रविक्तस्य सप्तान्नात्मकत्वं ध्यानार्थमित्युपपाद्य तेषां सप्तान्नानां सविनियोगानां प्रकाशकाः सूत्रभूताः 'एकमस्यासाधारणम्' इत्यादयो मन्त्रा इति प्रदर्शनम् ... १६४

'एकमस्य' इति सूत्रितस्य अन्नस्य सविनियोगस्य व्याख्यानभूतमन्त्रार्थविवरणम् .. १६८

'द्वे देवानभाजयत्' इति सूत्रितस्य अन्नद्वयस्य विवरणमन्त्रार्थप्रदर्शनम् ... १७०

'पशुभ्य एकम्' इति भागस्य विवरणमन्त्रार्थप्रदर्शनम् १७१

'कस्मात्तानि न क्षीयन्ते' इति सूत्रितप्रश्नप्रतिवचनभूतस्य 'पुरुषो वाव अक्षितिः'— इति मन्त्रस्य विवरणम् ... १७४

'त्रीण्यात्मनेऽकुरुत' इति सूत्रितस्य अन्नत्रयस्य विवरणमन्त्रार्थप्रदर्शनम् ... १७६

तेषामेव प्राजापत्यानामन्नानामाधिभौतिकविस्तारप्रदर्शनम् १८०

तेषामेव आधिदैविकविभूतिप्रदर्शनम् ... १८२

पुत्रादीनां साधनानां साध्यविशेषसंबन्धप्रतिपादनम् ... १९०

पुत्रस्य लोकजयहेतुत्वप्रकारप्रदर्शनार्थं पित्रा स्वस्य मरण-

काले कर्तव्यस्य संप्रत्त्याख्यस्य कर्मण उपन्यासः ... १९१
पुत्रनामनिर्वचनम् ... १९३
कृतसंप्रत्तिके दैववागादिप्रवेशप्रकारकथनम् ... १९६
वाङ्मनःप्राणानामुपासने विशेषप्रतिपादनार्थं व्रतमीमांसा २००

**षष्ठं ब्राह्मणम्** **२०८—२१२**

प्रपञ्चितस्य अविद्याकार्यस्य संक्षेपेण उपसंहारप्रदर्शनम्... २०८

**द्वितीयोऽध्यायः** ... **२१३—३५०**

**प्रथमं ब्राह्मणम्** **२१५—२७१**

प्रथमाध्याये सूत्रितविद्याविद्ययोः अविद्यायाः प्रपञ्चितत्वात् विद्यायाः प्रपञ्चनार्थं द्वितीयाध्यायारम्भः इति वृत्तानुवादपूर्वकं संबन्धकथनम् ... २१५
पूर्वपक्षसिद्धान्ताख्यायिकारूपेण शास्त्रार्थस्य समर्पणे श्रोतुः सुखेन बोधो भवतीत्यादिना आख्यायिकाप्रयोजनकथनपूर्वकम् अविद्याविषयमेव आत्मत्वेन उपगतवन्तं गार्ग्यं पूर्वपक्षिणं तद्विपरीतात्मदर्शिनमजातशत्रुं सिद्धान्तिनं च उपस्थाप्य आख्यायिकाप्रदर्शनम् ... २१६
गार्ग्येण आदित्यादिब्रह्मणां क्रमेण उपपादनम्, अजातशत्रुणा तेषां क्रमेण ब्रह्मत्वप्रत्याख्यानप्रदर्शनं च ... २१८
स्वाभिप्रेतब्रह्मसु प्रत्याख्यातेषु तूष्णीं स्थितस्य गार्ग्यस्य ब्रह्मविज्ञापनार्थम् अजातशत्रुणा सुप्तपुरुषं प्रति नयनम् ... २२६

सुप्तपुरुषसंबोधनव्याजेन गार्ग्याभिमतस्य ब्रह्मणः विस्तरेण अब्रह्मत्वोपपादनम् ... २२९
आत्मस्वभावविजिज्ञापयिषया 'क्वैष तदाभूत् कुत एतदागात्' इति प्रश्नद्वयमुत्थाप्य तदर्थप्रतिभानाभाववन्तं गार्ग्यं प्रति अजातशत्रुणा 'क्वैष तदाभूत्' इति प्रश्नार्थत्वेन आत्मस्वरूपोपन्यासः ... २३६
कार्यकरणवियोगेऽपि स्वप्ने संसारधर्मित्वमात्मनः दृश्यते इति शङ्कायाः स्वप्नस्यैव मृषात्वोपन्यासेन परिहारः २३९
केन पुनः क्रमेण सुषुप्तो भवति इत्यर्थस्योपपादनम् ... २४३
'कुत एतदागात्' इति प्रश्नार्थतया ऊर्णनाभ्यादिदृष्टान्तेन कारकभेदाभावेऽपि आत्मनः सकाशात् ब्रह्मादिस्तम्बपर्यन्तप्राणिजातस्य उत्पत्त्यादिकथनम् ... २४६
ब्रह्मविद्याप्रतिपादकवाक्येषु ब्रह्मविजिज्ञासूनां बुद्धिव्युत्पादनाय—'तस्योपनिषत्' इत्यत्र किं प्रकृतस्य संसारिणः इयमुपनिषत्, उतासंसारिणः इति विचारोपक्रमः ... २५०
पूर्वपक्षिणः निरीश्वरवादनिरूपणम् ... २५०
सिद्धान्तिना सेश्वरवादस्योपन्यासः ... २५३
व्याधकुलसंवर्धितराजसूनुदृष्टान्तेन असंसारिण एव अविद्यया संसारित्वं प्राप्तस्य आचार्येण प्रतिबोधितस्य ब्रह्मभावोपन्यासः ... २५९
द्वैतिनां मतमुपन्यस्य तत्खण्डनम् .... २६२

तार्किकमतोपन्यासः तद्दूषणं च ... २६६

विचारोपसंहारः .... २७१

## द्वितीयं ब्राह्मणम् ... २७२—२७९

ब्रह्मोपनिषत्प्रसङ्गेन करणानां प्राणानां स्वरूपमवधारयति– इति वृत्तवर्तिष्यमाणयोः संगतिकथनम् ... २७२

आधानप्रत्याधानादिविशेषणविशिष्टप्राणदर्शनस्य फलप्रदर्शनपूर्वकं विशिष्टप्राणस्वरूपनिरूपणम् ... २७३

तं प्राणं चक्षुषि विद्यमानरेखादिद्वारा रुद्रादयः अन्वायत्ताः–इति प्रतिपाद्य एवं वेदितुः फलप्रदर्शनम्... २७५

उक्तार्थविवरणमन्त्रार्थप्रदर्शनम् ... २७७

## तृतीयं ब्राह्मणम् ... २८०—२९५

उपाधिविशेषापनयद्वारेण ब्रह्मणो निर्दिधारयिषया ब्रह्मण उपाधिभूतयोः मूर्तामूर्तयोः कार्यकरणविभागेन अध्यात्माधिदैवतयोः विभागप्रदर्शनम् ... २८०

तस्य मूर्तामूर्तरसस्य करणात्मनः पुरुषस्य रूपोपन्यासार्थं मतान्तरप्रदर्शनपूर्वकं राशित्रयकल्पकानां केषांचिदौपनिषदंमन्यमानानां प्रक्रियां प्रदर्श्य श्रुतिविरोधेन न्यायविरोधेन च तस्याः असमञ्जसत्वप्रदर्शनम् ... २८९

सत्यस्य सत्ये परमात्मस्वरूपे वक्तव्ये सत्यं निरवशेषं वक्तव्यमिति सत्यस्य करणात्मनः पुरुषस्य माहारजनादिरूपोपन्यासः ... २९०

सत्यस्य सत्यं यद्ब्रह्म, तस्य नेति नेतीत्यादिनिर्देशप्रकार प्रदर्शनम् ... २९३

**चतुर्थं ब्राह्मणम्** ... २९६—३२२

प्रस्तुताया ब्रह्मविद्याया अङ्गत्वेन संन्यासविधानार्थं याज्ञवल्क्यमैत्रेयीसंवादरूपाख्यायिकारम्भः इति वृत्तानुवादपूर्वकसंबन्धकथनम् ... २९६

पारिव्राज्यमधिजिगमिषुं याज्ञवल्क्यं प्रति अमृतत्वसाधनं मे ब्रूहि इति मैत्रेय्या प्रार्थनम् .... २९९

अमृतत्वसाधनवैराग्योत्पादनार्थमात्मनः पतिपुत्रादिसर्वापेक्षयापि प्रियत्वमुपपाद्य अमृतत्वसाधनमात्मज्ञानमेव श्रवणमनननिदिध्यासनैः संपादनीयमिति याज्ञवल्क्येन उपदेशः ... ३०१

आत्मनि विदिते सर्वं विदितं भवति इत्यत्र उपपत्त्युपन्यासः ... ३०४

आत्मैव सर्वम् इति दुन्दुभिशब्दादिदृष्टान्तप्रदर्शनेन उपपादनम् ... ३०६

स्थितिकाले सर्वस्यात्मरूपत्वप्रदर्शनम् ... ३०७

उत्पत्तिकाले सर्वं ब्रह्मैवेति कथनम् ... ३०८

वेदस्याप्रामाण्यशङ्कानिरासार्थं पुरुषनिश्वासवत् परमात्मनः सकाशात् अप्रयत्नेनैव जातत्वकथनम् ... ३०८

प्रलयेऽपि सर्वस्य ब्रह्मत्वनिरूपणार्थं परम्पराक्रमेण शब्दादीनां ग्राहककरणैः सह प्रज्ञानघने प्रलयप्रदर्शनम् ३१०

सैन्धवखिल्यदृष्टान्तेन ब्रह्मविदः ब्रह्मविद्यानिमित्तकात्यन्तिकप्रलयं निरूप्य अखण्डब्रह्मस्वरूपत्वकथनम् ... ३१३

'न प्रेत्य संज्ञास्ति' इति वाक्यार्थमजानन्त्या मैत्रेय्याः— अविद्याप्रत्युपस्थापितसर्वोपाधिविनाशे तन्निमित्ता विशेषसंज्ञा नास्ति— इत्यर्थकथनम् ... ३१७

अविद्याकल्पितकार्यकरणसंघातोपाधिसंबन्धे सत्येव विशेषसंज्ञा, यदा तु ब्रह्मविद्यया अविद्या नाशमुपगमिता, सर्वमात्मैवाभूत्, तदा केन कं पश्येत् इत्याद्युपन्यासः ... ३१९

**पञ्चमं ब्राह्मणम्** ... ३२३—३४६

अत्मैवेदं सर्वम् इत्यत्र यो हेतुरुक्तः आत्मैकसामान्योद्भवप्रलयाख्यः, सः असिद्धः इति शङ्कानिरासार्थमुत्तरं ब्राह्मणमिति वृत्तानुवादपुरःसरं पूर्वोत्तरब्राह्मणयोः संगतिकथनम् ... ३२३

पृथिव्यादीनां ब्रह्मादिस्तम्बपर्यन्तप्राणिनां च परस्परोपकार्योपकारकभावापन्नत्वेन एककारणकत्वं सुलभमिति पूर्वोक्तहेतुः संगत एवेति— यदेवैकं कारणं सर्वेषाम्, तदेवैकं ब्रह्म परमार्थभूतम् तज्ज्ञानमेव अमृतत्वसाधनमिति मधुकाण्डार्थोपन्यासः ... ३२४

सर्वकारणभूतः परमात्मैव परमार्थभूतः, तज्ज्ञानमेवाविद्यानिवृत्तिद्वारा परमपुरुषार्थसाधनम् इति शास्त्रार्थनिगमनमुक्त्वा एतस्मिन्सर्वात्मभूते ब्रह्मविदि सर्वात्मनि

सर्वं जगत्समर्पितम्— इत्यत्र रथनाभिनेम्यरदृष्टान्तोपन्यासः .... ३३३

याज्ञवल्क्यमैत्रेयीसंवादरूपाख्यायिकया प्रवृत्तां ब्रह्मविद्यां परिसमाप्य तस्याः स्तुत्यर्थमाख्यायिकारूपेण प्रवृत्तमन्त्रार्थोपन्यासः ... ३३७

**षष्ठं ब्राह्मणम्** ... **३४७—३५०**

ब्रह्मविद्यायाः स्तुत्यर्थं ब्रह्मविद्यार्थस्य मधुकाण्डस्य आचार्यपरम्पराक्रमरूपवंशकथनम् .... ३४७

**तृतीयोऽध्यायः** .... **३५१—४९०**

**प्रथमं ब्राह्मणम्** ... **३५३—३७०**

अतीतेनागमप्रधानेन मधुकाण्डेन उपपत्तिप्रधानस्यास्य याज्ञवल्क्यकाण्डस्य पुनरुक्तिशङ्कानिराकरणपूर्वकं तत्त्वज्ञाने आगमोपपत्त्योः आवश्यकत्वप्रतिपादनम् ... ३५३

आख्यायिका तु ब्रह्मविद्यास्तुत्यर्था, विद्याग्रहणोपायभूतदानविधिपरा, ब्रह्मविद्भिः सह संयोगः विद्याप्राप्त्युपायः इति प्रदर्शनपरा च इति कथनम् ... ३५३

सार्वभौमस्य जनकस्य स्वयज्ञे समागतेषु ब्रह्मवित्सु अनूचानतमः क इति जिज्ञासया तन्निर्णयाय स्वगोष्ठे सालङ्कारगोसहस्रावरोधनप्रदर्शनम् ... ३५४

ततो ब्राह्मणान्प्रति यो वो ब्रह्मिष्ठः तस्यैतद्गोसहस्रमिति जनकेनोक्ते इतरेष्वप्रगल्भेषु चतुर्वेदी याज्ञवल्क्यः स्वी-

यब्रह्मचारिणं गवानयने आज्ञापयामास; ततः क्रुद्धेषु ब्राह्मणेषु कश्चित् होता अश्वलो नाम ब्रह्मिष्ठाभिमानी याज्ञवल्क्यं प्रष्टुमुपचक्रमे इति प्रतिपादनम् ... ३५५

मधुकाण्डव्याख्यातोद्गीथोपासनस्यैवायं विस्तरः इति संगतिप्रदर्शनपूर्वकं स्वाभाविकाज्ञानासङ्गप्रयुक्तात् कर्मस्वरूपान्मृत्योः केन साधनेन यजमानस्यातिमुक्तिः— इति अश्वलप्रश्नमुपन्यस्य वाचि होतरि च अग्निदृष्ट्या इति समाधानम् ... ३५७

काललक्षणान्मृत्योः किमतिमुक्तिसाधनम् इति प्रश्नस्य चक्षुरादौ आदित्यादिदृष्टिरिति उत्तरम् ... ३५९

कर्मफलं प्रतिपद्यमानो यजमानः केनावष्टम्भेन तत्प्राप्नोति इति प्रश्नस्य मनसि ब्रह्मणि च चन्द्रमादृष्ट्या— इति समाधानम् ... ३६२

अल्पीयःसु कर्मसु महतां कर्मणां तत्फलस्य वा केनचित्सामान्येन अभेदध्यानात्मकानि संपदुपासनान्युच्यन्ते इति कथनम् ... ३६३

ऋगाहुतिमनःप्रभृतिषु संपदुपासनोपन्यासः ... ३६४

अश्वलप्रश्नोपरमोपपादनम् ... ३६९

**द्वितीयं ब्राह्मणम्— आर्तभागयाज्ञवल्क्यसंवादः ... ३७१—३८४**

बन्धज्ञानं विना ततो विश्लेषायोगात् मुमुक्षोः सप्रयोजकग्रहातिग्रहलक्षणमृत्युरूपबन्धज्ञानाय अनन्तरब्राह्मणप्र-

वृत्तिरिति वृत्तानुवादपुरःसरं संबन्धकथनम् ... ३७१

कति ग्रहाः कत्यतिग्रहाः— इति आर्तभागप्रश्नस्य प्राणादयस्त्वगन्ता अष्टौ ग्रहाः, गन्धादयस्पर्शान्ता अष्टौ अतिग्रहाः— इति समाधानम् ... ३७३

उक्तग्रहातिग्रहलक्षणमृत्योः को मृत्युरिति प्रश्नस्य परमात्मदर्शनमित्युत्तरम् ... ३७७

परमात्मदर्शनेन मुक्तस्य विदुषः मृतौ प्राणानामुत्क्रमणमस्ति न वा— इत्यादिप्रश्नस्य, नास्त्युत्क्रमणम्, आत्मन्येव तेषां प्रविलयः— इत्यादिसमाधानम् ... ३७८

अविदुषः मृत्यनन्तरं पुनः कार्यकरणसंघातोपादानस्य प्रयोजकं किमिति प्रश्नस्य कर्म इत्युक्ते समाधाने आर्तभाग उपरराम इति प्रदर्शनम् ... ३८०

**तृतीयं ब्राह्मणम्— भृज्युयाज्ञवल्क्यसंवादः ... ३८५—३९९**

पुण्यपापरूपकर्मणां बन्धहेतुत्वे उक्ते पापफलस्य दुःखबहुलस्य लोकप्रसिद्धत्वेन शास्त्रैकगम्यं पुण्यफलं प्रतिपादयितुं मोक्षस्य पुण्यफलत्वं निरसितुं च उत्तरं ब्राह्मणमिति वृत्तानुवादपूर्वकं संबन्धकथनम् ... ३८५

विद्यासहितस्य कर्मण एव मोक्षजनकत्वमिति केषां चित् मतमुपन्यस्य नित्यसिद्धात्मस्वरूपमोक्षस्य जन्यत्वं न संभवतीति तन्मतदूषणपूर्वकम्, कर्म अज्ञाननिवृत्तिसा-

घनीभूतज्ञानसाधनं भविष्यतीति स्वमतप्रपञ्चनम् ... ३८६

अश्वमेधयाजिनः क्वाभवन्निति अश्वमेधयाजिनां गम्यस्थाने भुज्युना पृष्टे हैरण्यगर्भं पदमेव तेषां गम्यस्थानमिति महर्षियाज्ञवल्क्येन समाहिते भुज्योः तूष्णीमवस्थानकथनम् ... ३९४

**चतुर्थं ब्राह्मणम्— उषस्तयाज्ञवल्क्यसंवादः ... ४००—४०६**

यत् ब्रह्म द्रष्ट्रात्मकमगौणम्, यः सर्वान्तरः आत्मा, तं मे विस्पष्टं कथय— इति उषस्तिप्रश्नस्य— यः कार्यकरणसंघातं तद्विलक्षणः सन् चेष्टयति, स आत्मेति आत्मास्तित्वमुक्त्वा घटादिवत्तस्य प्रत्यक्षतो विषयीकरणं तु तत्साक्षित्वादशक्यम्—इत्यादिसमाधानोपन्यासः ४००

**पञ्चमं ब्राह्मणम्— कहोलयाज्ञवल्क्यसंवादः ... ४०७—४२१**

बद्धस्य बन्धमोक्षसाधनं ससंन्यासमात्मज्ञानं वक्तव्यमिति उत्तरारम्भः इति वृत्तानुवादपूर्वकं संबन्धकथनम् ... ४०७

यदेव साक्षादपरोक्षाद्ब्रह्म, य आत्मा सर्वान्तरः तं मे व्याचक्ष्वेति कहोलप्रश्नमुपन्यस्य, तस्य क्षेत्रज्ञविषयात् उषस्तप्रश्नात् परमात्मरूपार्थपरत्वमिति मतान्तरोपन्यासः ... ४०८

प्रश्नप्रतिवचनयोरैकरूप्यादिना अर्थान्तरपरत्वं न संभवतीति तन्मतदूषणपूर्वकं पूर्वं पृष्टस्यैव अशनायाद्यतीतत्वादिविशेषो वक्तव्य इति पुनः प्रश्नः— इति स्वमतोपन्यासः ... ४०९

आत्मनः परमार्थतः अशनायादिसर्वधर्मातीतत्वमुपपाद्य तमेतमात्मानं विदुषः त्रिविधैषणाभ्यो व्युत्थानरूपसंन्यासविधिनिरूपणम् ... ४११

'व्युत्थाय अथ भिक्षाचर्यं चरन्ति' इत्यस्य विधायकप्रत्ययाभावेन अर्थवादत्वमेवेति शङ्कायाः, 'औदुम्बरो यूपो भवति' इतिवत् अज्ञातार्थत्वेन पञ्चमलकारत्वनिश्चयात् विधायकत्वोपपत्तिः— इति निरसनम् ... ४१४

पारिव्राज्यस्य मुख्यामुख्यभेदेन द्वैविध्यकथनम् ... ४१८

सर्वकर्मपरित्यागरूपमुख्यसंन्यासविशिष्टेन अशनायादिसर्वधर्मातीतात्मस्वरूपविज्ञानेन ब्राह्मणः कृतकृत्यो भवति, अतः स एव विज्ञेयः इत्युपपादनम् ... ४१८

**षष्ठं ब्राह्मणम्— गार्गीयाज्ञवल्क्यसंवादः ... ४२२—४२५**

उक्तस्य सर्वान्तरस्यात्मनः स्वरूपाधिगमाय उत्तरो ग्रन्थः इति संबन्धकथनम् ... ४२३

गार्ग्याः स्थूलप्रपञ्चकारणपरम्पराप्रश्नः, याज्ञवल्क्येन तत्तत्कारणनिरूपणक्रमेण अण्डारम्भकभूतपर्यन्तकारणनिरूपणं च .... ४२३

**सप्तमं ब्राह्मणम्— उद्दालकयाज्ञव-
ल्क्यसंवादः ... ४२६—४३८**

सूत्रात्मनः अन्तर्यामिणश्च आचार्योपदेशैकगम्यत्वख्यापनाय इतिहासपुरःसरं कः सूत्रात्मा कश्चान्तर्यामी— इति उद्दालकप्रश्नोपन्यासः ... ४२६

यत् सर्वभूतसंदृब्धिहेतुभूतं वाय्वात्मकं सप्तदशविधं लिङ्गं कर्मवासनासमवायि, तत् सूत्रम्, यः सर्वप्रपञ्चाभ्यन्तरः सर्वैरवेद्यः सर्वनियन्ता अमृतः आत्मा, सः अन्तर्यामी— इति च याज्ञवल्क्यप्रतिवचनोपन्यासः ... ४३०

**अष्टमं ब्राह्मणम्— गार्गीयाज्ञवल्क्य-
संवादः ... ४३९—४५४**

पूर्वं याज्ञवल्क्येन निषिद्धा मूर्धपातभयादुपरता सती गार्गी पुनः ब्राह्मणानुज्ञापुरःसरं प्रश्नद्वयं प्रष्टुमुत्थितवती —इत्युपपादनम् ... ४३९

सर्वं जगत् यस्मिन् सूत्रसंज्ञके एकीभवति, तत्सूत्रं कस्मिन्नोतं च प्रोतं च— इति प्रथमस्य गार्गीप्रश्नस्य, अव्याकृताकाशे— इति याज्ञवल्क्यप्रतिवचनम् ... ४४१

स चाव्याकृताकाशः कस्मिन्नोतश्च प्रोतश्च— इति द्वितीयप्रश्नस्य— अक्षरे परब्रह्मणि— इत्युत्तरमुक्त्वा तस्य चाक्षरस्य ‘अस्थूलम्’ इत्यादिना निषेधमुखेन अस्तित्वोपपादनम् ... ४४३

तस्यैवाक्षरस्यास्तित्वसिद्धये जगद्व्यवस्था प्रशासितृपूर्विका, व्यवस्थात्वात् राजव्यवस्थावत्- इत्याद्यनुमानोपन्यासः ... ४४५
मोक्षहेतुज्ञानविषयत्वेनापि तदस्तित्वोपन्यासः ... ४४९
दुरुत्तरस्य प्रश्नद्वयस्य समाधाने दत्ते, न कोऽपि युष्माकं मध्ये याज्ञवल्क्यस्य जेता विद्यते इति— ब्राह्मणानुक्त्वा गार्गी उपरराम इत्युपपादनम् ... ४५२

**नवमं ब्राह्मणम्—शाकल्ययाज्ञवल्क्यसंवादः ... ४५५—४९०**

ब्रह्मणः सर्वनियन्तृत्वस्योक्तत्वात् नियन्तव्यदेवताभेदसंकोचविकासद्वारा तस्यैव साक्षादपरोक्षत्वे अधिगन्तव्ये — इत्येतदर्थे शाकल्यब्राह्मणारम्भः— इति वृत्तानुवादपूर्वकं संबन्धकथनम् .... ४५५
शाकल्यकृतस्य देवतासंकोचविकासप्रश्नस्य— प्राणान्तः संकोचः आनन्त्यपर्यन्तो विकास इति संकोचविकासाभ्यां प्राणस्वरूपोक्त्या प्रतिवचनम् ... ४५५
तस्यैव प्राणस्य ब्रह्मणः देवलोकपुरुषभेदेन त्रिधा त्रिधा आत्मानं प्रविभज्यावस्थितस्य उपासनार्थं पुनः अष्टधा भेदोपदेशः ... ४६२
अथ याज्ञवल्क्योक्तं स्वानिष्टबोधकमपि वाक्यमन्यथा प्रतिपद्य शाकल्येन दिग्विज्ञानविषये कृतस्य प्राच्यां का

देवता दिगात्मनस्त्वाधिष्ठात्री इत्यादिप्रश्नस्य— आदित्यदेवता— इत्याद्युत्तरमुपन्यस्य, अन्ते 'स एष नेति नेत्यात्मा' इत्यात्मस्वरूपोपदेशः ... ४६८

अथ औपनिषदः पुरुषः क इति याज्ञवल्क्यप्रश्नस्य उत्तरं वक्तुमशक्त्या शाकल्यमूर्धपातवर्णनम् ... ४७७

अथ ब्राह्मणान्प्रति याज्ञवल्क्येन यो वः कामयते स मा पृच्छतु—इत्युक्ते, तेष्वप्रगल्भेषु पुनस्तान्प्रति जगन्मूलप्रश्ने कृते तैस्तदज्ञानात् जिता ब्राह्मणा याज्ञवल्क्येन नीतं च गोधनं तेनैवेति आख्यायिकासमाप्तिप्रदर्शनम् ... ४८१

'विज्ञानमानन्दं ब्रह्म' इति श्रुत्या विधिमुखेन ब्रह्मण उपदेशः ... ४८५

विचारपूर्वकं ब्रह्मानन्दस्य संवेद्यत्वाभावसमर्थनम् ... ४८६

## चतुर्थोऽध्यायः ... ४९१—६८१

### प्रथमं षडाचार्यब्राह्मणम् ... ४९३—५०४

उपदिष्टस्यैव ब्रह्मण अधिगमने उपायान्तरस्य प्रदर्शनार्थमयमारम्भ इति वृत्तानुवादपूर्वकं ब्राह्मणद्वयस्य संबन्धकथनम् ... ४९३

स्वसभागतयाज्ञवल्क्यं प्रति किमर्थमागमनं पश्विच्छया सूक्ष्मवस्तुनिर्णयान्तप्रश्नश्रवणेच्छया वा— इति जनकेनोक्ते उभयार्थमिति याज्ञवल्क्योक्तिः ... ४९३

जनकं प्रति परैरुपदिष्टस्य ज्ञानसाधनस्य वागाद्यधिष्ठातृ-देवतासु ब्रह्मोपासनस्य याज्ञवल्क्येन विशेषणानामुपदेशेन संपूर्णोपासनोपदेशः ... ४९४

**द्वितीयं कूर्चब्राह्मणम्** ... ५०५—५११

विश्वतैजसप्राज्ञविज्ञानोपपादनपूर्वकं तुरीयब्रह्मप्रतिपत्ति-प्रकारोपन्यासः ... ५०५

**तृतीयं ब्राह्मणम्** ... ५१२—६००

जाग्रत्स्वप्नसुषुप्ततुरीयोपन्यासानन्तरं जाग्रत्स्वप्नादिद्वारेणैव महता तर्केण विस्तरेण तस्यैव प्रस्तुतस्य ब्रह्मण अधिगमः कर्तव्यः, ब्रह्मणश्च व्यतिरिक्तत्वशुद्धत्वादिकं प्रदर्शनीयमित्येतदर्थमुत्तरारम्भः — इति वृत्तानुवादपूर्वकसंबन्धकथनम् ... ५१२

जनकं द्रष्टुं गतस्य न वदिष्ये— इत्येवं संकल्पस्यापि याज्ञवल्क्यस्य पूर्वमेव राज्ञे कामप्रदानाख्यवरस्य दत्तत्वेन संकल्पितान्यथाकरणोपदेशः ... ५१३

किं ज्योतिरयं पुरुषः— इत्यादिजनककृतप्रश्नानाम्— आदित्यज्योतिः— इत्यादियाज्ञवल्क्यदत्तोत्तरोपन्यासः ५१४

आदित्यादिवागन्तेषु ज्योतिःषु अस्तमितेषु किं ज्योतिरयं पुरुषः— इति जनककृतप्रश्नस्य, आत्मैवास्य ज्योतिः — इति याज्ञवल्क्यप्रतिवचनोपन्यासः ... ५१८

कार्यकरणसंघात एवात्मा— इति लोकायतमतमुपन्यस्य, स्वप्नस्मृत्यादिसिद्ध्यनुपपत्त्या देहातिरिक्त आत्मा अभ्युपगन्तव्यः— इति सिद्धान्तोपन्यासः ... ५२०

कतम आत्मा— इति जनकप्रश्नस्य— योऽयं विज्ञानमयः इत्यादियाज्ञवल्क्योत्तरम् ... ५२४

जाग्रत्काले आत्मज्योतिषः मुञ्जेषीकावत् निष्कृष्य दर्शयितुमशक्यत्वात् स्वप्ने स्वयंज्योतिष्ट्वप्रतिपादनम् ... ५२८

धीव्यतिरिक्त आत्मा नास्त्येव, धीव्यतिरिक्ता बाह्यार्था अपि न सन्त्येव—इत्यादिसौगतपक्षमुपन्यस्य, अवभास्यस्यैव अवभासकत्वं न संभवति इत्याद्यनेकयुक्तिभिः तत्खण्डनपूर्वकं धीव्यतिरिक्तात्मव्यवस्थापनम् ... ५३१

विशेषतः स्वप्नावस्थोपपादनपूर्वकम् आत्मनः स्वयंज्योतिष्ट्वस्यैव विस्तरेणोपपादनम् ... ५४२

स्वयंज्योतिष्ट्वाद्युक्तार्थप्रतिपादकमन्त्रार्थविवरणम् ... ५४९

स्वप्ने कार्यकरणव्यावृत्तस्यापि मोदत्रासादिदर्शनात् नैवायं मृत्युमतिक्रामति, अतो विमोक्षाय ब्रूहि—इत्येवं जनकपर्यनुयुक्तयाज्ञवल्क्येन सुषुप्ते आत्मनो मोदत्रासादिराहित्यप्रतिपादनपूर्वकमसङ्गत्वोपपादनम् ... ५५४

स्वप्ने कर्तृत्वाभावात् जागरिते च कारकावभासकत्वेन कर्तृत्वोपपत्तेः स्वतः कर्तृत्वाभावात् असङ्गत्वोपपादनम् ५५८

उक्तार्थे महामत्स्यदृष्टान्तप्रदर्शनम् ... ५६१

श्येनवाक्येन आत्मनः सौषुप्तरूपोपन्यासः ... ५६२

आत्मनः परोपाधिकृतं संसारधर्मित्वं यन्निमित्तम्, तस्याः सर्वानर्थबीजभूताया अविद्यायाः सतत्त्वोपपादनम् ... ५६४
सर्वात्मभावरूपमोक्षस्य विद्याफलस्य प्रत्यक्षतो निर्देशपूर्वकं जीवस्य परेणात्मना एकीभूतस्य विशेषज्ञानाभावे—'तद्यथा प्रियया स्त्रिया'—इत्यादिदृष्टान्तोपन्यासः ... ५६८
सुषुप्ते पित्रादीनां पितृत्वाभावप्रतिपादनम् ... ५७१
सुषुप्तौ द्रष्टुः अविनाशित्वात् तद्दृष्ट्यादेरविनाशित्वप्रतिपादनपूर्वकम्, द्वितीयवस्त्वभावात् न पश्यतीति व्यवहारोपपत्तिः इत्युपन्यासः ... ५७८
प्रतीचः चिन्मात्रज्योतिषः विशेषविज्ञानराहित्यमेव स्वरूपम्, तथापि स्वाविद्याकल्पितविशेषविज्ञानवत्त्वमाश्रित्य अवस्थाद्वयं सिध्यतीति प्रतिपादनम् ... ५८५
पूर्वोक्तस्य प्राज्ञस्य सलिलवत् स्वच्छस्य आनन्दरूपस्य ब्रह्मवस्तुनः उपपादनोपसंहारः ... ५८६
यस्य परमानन्दस्य अन्यानि भूतानि मात्रामुपजीवन्ति तस्य मात्रिणः मनुष्यानन्दमारभ्य उत्तरोत्तरं शतगुणोत्कर्षवर्णनेन सर्वोत्कृष्टत्वप्रतिपादनम् ... ५८८
प्रतिपादितस्य सुषुप्तिस्वप्नादेः वक्ष्यमाणमोक्षबन्धनदृष्टान्तत्वात्, दार्ष्टान्तिके ते वक्तव्ये—इत्येतदर्थमुत्तरारम्भः—इति पूर्वोत्तरसंबन्धकथनम् ... ५९२
'तद्यथा अनः' इत्यारभ्य 'इति नु कामयमानः' इत्य-

न्तेन ग्रन्थेन संसारवर्णनमिति ग्रन्थविभागकथनम् ... ५९४
आत्मनः स्वप्नान्तात् बुद्धान्तगमनवत्— अस्माद्देहात् देहान्तरप्रतिपत्तौ भृशाहितसंभारशकटदृष्टान्तोपन्यासः ५९४
आत्मन ऊर्ध्वोच्छ्वासित्वं कस्मिन्काले किंनिमित्तं कथं किमर्थं वा इति प्रश्नानुत्थाप्य, यदा जरादिना कार्श्यं प्राप्नोति, तदा अनेकविधमरणनिमित्तेभ्यः वृन्तेभ्यः फलानीव पुनः प्राणानां विशेषाभिव्यक्तिलाभाय अङ्गेभ्यः प्रमुच्यते— इत्युत्तरोपन्यासः ... ५९६
शरीरं परित्यज्य गच्छत आत्मनो देहान्तरोपादाने सामर्थ्याभावशङ्कायाः राजभृत्यदृष्टान्तेन सर्वभूतान्यादित्यादीनि तत्कर्मप्रयुक्तानि कृतैरेव कर्मफलोपभोगसाधनैः कर्मफलवेदितारं प्रतीक्षन्ते— इति समाधानकथनम् ५९८
'राजानं प्रयियासन्तम्' इत्यादिदृष्टान्तेन आत्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति— इति कथनम् ... ६००

## चतुर्थं शारीरकब्राह्मणम् ... ६०१—६७८

आत्मन अङ्गेभ्यः संप्रमोक्षणस्य उक्तस्यैव विस्तरेण उपपादनम् ... ६०१
परलोकाय गच्छन्तमात्मानं विद्याकर्मणी पूर्वप्रज्ञा च अनुगच्छन्तीत्युपपादनम् ... ६०६
देहान्तरारम्भे देहान्तरं पूर्वाश्रयं विमुञ्चतीत्यत्र तृणजलूकादृष्टान्तोपन्यासः ... ६०८

आत्मनः ये बन्धनसंज्ञका उपाधिभूता बुद्ध्यादयः कामकर्मादयश्च, तेषां पुञ्जीकृत्य निर्देशः .. ६११

संसारप्रकरणमुपसंहृत्य अकामस्य आत्मकामस्य ब्रह्मविदः न प्राणा उत्क्रामन्ति, किं तु इहैव ब्रह्मैव सन् ब्रह्म अप्येति इति प्रतिपादनम् ... ६१५

उक्तस्य मोक्षस्य मोक्षसाधनस्य दृढीकरणाय मन्त्रार्थोपन्यासः ... ६२४

आत्मकामस्य ब्रह्मविदो मोक्ष इत्येतस्मिन्नर्थे मन्त्रब्राह्मणाभ्यामुपसंहृते तस्यैवार्थस्य विस्तरेण प्रतिपादका एते श्लोका इति उत्तरसंदर्भस्य संबन्धकथनपूर्वकं ज्ञानमार्गस्य मोक्षसाधनत्वोपदेशः ... ६२७

प्रस्तुतज्ञानमार्गस्तुत्यर्थं मार्गान्तरनिन्दाप्रतिपादनम् ... ६३१

उक्तात्मज्ञानस्तुत्यर्थमेव तन्निष्ठस्य कायक्लेशराहित्यप्रतिपादनम् ... ६३२

ब्रह्मविदो विद्यया कृतकृत्यत्वे स्वानुभवसंप्रतिपत्तिप्रतिपादनम् ... ६३४

विद्यास्तुत्यर्थं विदुषो विहिताकरणादिप्रयुक्तभयाभावप्रतिपादनम् ... ६३५

आचार्योपदेशजन्यपरमार्थज्ञानसंस्कृतमनसो ब्रह्मदर्शनसाधनत्वोपदेशः ... ६३७

प्रतिपादिते ब्रह्मात्मनि सर्वस्य वेदस्य विनियोगप्रदर्शनार्थ-

मुत्तरकण्डिकेत्येवं पूर्वोत्तरसंबन्धप्रदर्शनपूर्वकं विविदिषावाक्येन ब्रह्मात्मज्ञाने विनियोगकरणार्थं तत्पूर्वतनवाक्येन ब्रह्मात्मनोऽनुवादप्रदर्शनम् ... ६४०
षष्ठप्रपाठकविहितायां ब्रह्मविद्यायां वेदानुवचनादीनां विनियोगप्रदर्शनम् ... ६४४
आत्मलोकावाप्त्यर्थत्वेन पारिव्राज्यविधाननिरूपणम् ... ६४७
उक्ते विद्याफले मन्त्रेण संवादनिरूपणम् ... ६५३
निरुपाधिकब्रह्मविद्याया मोक्षफलकथनपूर्वकं याज्ञवल्क्याय गुरवे कृतकृत्यजनककृतस्वनिवेदनप्रतिपादनम् ... ६५४
सोपाधिकब्रह्मविद्याया अभ्युदयफलप्रदर्शनम् ... ६५६
समस्तारण्यकार्थस्य समुच्चित्य निर्देशः ... ६५७

**पञ्चमं मैत्रेयीब्राह्मणम् ... ६५९—६७८**

आगमेनाधिगतममृतत्वसाधनं ससंन्यासमात्मज्ञानं तर्केणाप्यधिगन्तव्यमित्येतदर्थमुत्तरं ब्राह्मणमिति वृत्तानुवादेन संगतिकथनम् .... ६५९
प्रव्रजिष्यन्तं याज्ञवल्क्यं प्रति स्वज्येष्ठभार्याया मैत्रेय्या अमृतत्वसाधनं किमिति प्रश्नोपन्यासः ... ६६०
निरुपाधिकपरमप्रेमास्पदीभूतात्मज्ञानमेव ससंन्यासममृतत्वसाधनमित्युपदिश्य याज्ञवल्क्यः प्रवव्राज इत्युपपादनम् ... ६६२
यावज्जीवादिश्रुतीनां व्युत्थानादिश्रुतीनां च विचारपूर्व-

कम् अविद्वत्कामिकर्तव्यार्थत्वविद्वद्विरक्तकर्तव्यार्थकत्व-रूपविषयविभागप्रदर्शनम् ... ६७०

**षष्ठं वंशब्राह्मणम्** ... ६७९—६८१

ब्रह्मविद्यास्तुत्यर्थं याज्ञवल्क्यकाण्डस्य आचार्यपरम्परोपदेशः ... ६७९

**पञ्चमोऽध्यायः** .... ६८३—७३८

**प्रथमं ब्राह्मणम्** ... ६८५—६९५

पूर्वमध्यायचतुष्टयेन निर्धारितस्य निरुपाधिकब्रह्मण एव सोपाधिकस्य पुरस्तादनुक्तानि उपासनानि वक्तव्यानीति परः संदर्भः इति पूर्वोत्तरग्रन्थसंबन्धकथनम् ... ६८५

ओंकारादीनां ब्रह्मविद्यासाधनत्वविधित्सया सर्वोपनिषदर्थस्य परिपूर्णस्य परब्रह्मणः 'पूर्णमदः' इत्यादिमन्त्रेणानुवाद इति कथनम् ... ६८६

द्वैताद्वैतात्मकमेकं ब्रह्मैव परमार्थसत्यम् इत्येव उक्तमन्त्रार्थ इति मतान्तरोपन्यासः ... ६८७

अद्वितीये ब्रह्मणि उत्सर्गापवादयोः विकल्पसमुच्चययोर्वा असंभवात् श्रुतिस्मृतिन्यायविरोधाच्च न ब्रह्मणः द्वैताद्वैतात्मकत्वमिति विस्तरेण परमतखण्डनम् ... ६८८

ओंकारस्य ब्रह्मोपासनसाधनत्वेन विधानम् ... ६९२

**द्वितीयं ब्राह्मणम्** .... ६९६—७००

दमदानदयानां सकलब्रह्मोपासनाङ्गत्वेन विधानम् ... ६९६

**तृतीयं ब्राह्मणम्** ... ७०१—७०२

हृदयं ब्रह्मेति उपासनविधानम् ... ७०१

**चतुर्थं ब्राह्मणम्** ... ७०३—७०४

हृदयाख्यस्य ब्रह्मणः सत्यमित्युपासनविधानम् ७०३

**पञ्चमं ब्राह्मणम्** ... ७०५—७१०

सत्यस्य ब्रह्मणः स्तुत्यर्थं प्रथमजत्वाद्युपपादनम् ... ७०५

सत्यस्य ब्रह्मण आदित्यमण्डलाक्षिरूपस्थानविशेषे उपासनविधानम् ... ७०७

व्याहृतिषु स्थानद्वयसंबन्धिनः सत्यस्य ब्रह्मणः शिर आद्यवयवदृष्टिविधानम् ... ७०९

**षष्ठं ब्राह्मणम्** ... ७११

मन उपाधिविशिष्टस्य ब्रह्मणः उपास्तिविधानम् ... ७११

**सप्तमं ब्राह्मणम्** ... ७१२

विद्युद्ब्रह्मेत्युपासनविधानम् ... ७१२

**अष्टमं ब्राह्मणम्** ... ७१३

वाग्धेनुः ब्रह्मेत्युपास्तिविधानम् ... ७१३

**नवमं ब्राह्मणम्** ... ७१४

वैश्वानराग्न्युपाधिकस्य ब्रह्मणः उपास्तिविधानम् ... ७१४

**दशमं ब्राह्मणम्** ... ७१५—७१६

एतत्प्रकरणस्थानां सर्वेषामुपासनानां गतिकथनम्, अश्रुत-फलोपासनानां ब्रह्मलोकफलकथनं च ... ७१५

**एकादशं ब्राह्मणम्** .... ७१७

व्याधितस्तप्यमानस्य तापे तप इति दृष्टिविधानम् ... ७१७

**द्वादशं ब्राह्मणम्** ... ७१८—७२०

अन्नप्राणौ सहभूतौ ब्रह्म— इत्युपास्तिविधानम् ... ७१८

**त्रयोदशं ब्राह्मणम्** ७२१—७२३

उक्थादिदृष्ट्या प्राणोपासनविधानम् ... ७२१

**चतुर्दशं ब्राह्मणम्** ... ७२४—७३५

गायत्र्याः प्रथमे पादे त्रैलोक्यदृष्टिविधानम् ... ७२४

द्वितीये पादे त्रैविद्यदृष्टिविधानम् ... ७२५

तृतीये पादे प्राणदृष्टिविधानं तुरीयपादाख्यगायत्र्यभि-धेयनिरूपणं च ... ७२६

अभिधानात्मकगायत्र्या अभिधेयतन्त्रत्वप्रतिपादनम् ... ७२७

गायत्रीविदः प्रतिग्रहदोषाभावाभिधानम् ... ७३१

गायत्र्युपस्थानमन्त्रार्थनिरूपणम् .... ७३३

सार्थवादेन वाक्येन गायत्र्या मुखाख्याङ्गविधानम् ... ७३४

**पञ्चदशं ब्राह्मणम्** ... ७३६—७३८

ज्ञानकर्मसमुच्चयकारिण अन्तकाले आदित्यप्रार्थनप्रतिपादनम् ... ७३६

**षष्ठोऽध्यायः** .... ७३९—८१७

**प्रथमं ब्राह्मणम्** ... ७४०—७५५

ज्येष्ठश्रेष्ठत्वगुणविशिष्टप्राणोपासनविधानम् ... ७४०

वसिष्ठत्वगुणकवागात्मकप्राणोपासनं प्रतिष्ठात्वगुणकचक्षुरात्मकप्राणोपासनयोर्विधानम् ... ७४२

संपद्गुणकश्रोत्रप्राणोपासनविधानम् ... ७४४

प्रजापतिं गत्वा कोऽस्माकं मध्ये वसिष्ठः इति वागादिप्राणैः कृतप्रश्नस्य यस्मिन्व उत्क्रान्ते शरीरं पापीयो भवति स वो वसिष्ठः इति प्रजापत्युत्तरनिरूपणम् ... ७४५

वागादीनां प्रत्येकं क्रमेण उत्क्रमणेऽपि शरीरस्य यथापूर्वं प्राणनादिकं दृष्ट्वा पुनः प्रवेशनिरूपणम् ... ७४७

प्राणे उत्क्रमणं करिष्यति सति प्रचलितवागादिकृतप्राणप्रार्थनम्, प्राणस्य बलिदानं च ... ७४९

प्राणिभिरद्यमानं सर्वमप्यन्नं प्राणस्यान्नमिति दृष्टिविधानम् ... ७५२

भक्ष्यमाणा आपः प्राणस्य वास इति दृष्टिविधानम् .... ७५३

**द्वितीयं ब्राह्मणम्** ... ७५६—७८४

पूर्वोत्तरसंदर्भसंबन्धकथनपूर्वकं श्वेतकेतोः पाञ्चालराजप्र

वाहणपरिषद्गमनवर्णनम् ... ७५६
वेत्थ यथेमाः प्रजा म्रियमाणा विप्रतिपद्यन्ते इत्यादिप्रवाहणकृतपञ्चप्रश्नानां श्वेतकेतोरुत्तरदानसामर्थ्याभावप्रतिपादनम् ... ७५९
उत्तरदानासामर्थ्याद्राजकृतसत्कारमप्यनादृत्य पितरमागत्य श्वेतकेतुना प्रवाहणकृतपञ्चप्रश्ननिवेदनम् ... ७६२
ततः पुत्रं विना आगताय गौतमाय प्रवाहणेन आसनादिपूजापूर्वकं वरदानम् ... ७६३
वरदानप्रतिज्ञानन्तरं पञ्चप्रश्नोत्तराणि ब्रूहि इति गौतमवचनम् ... ७६४
मानुषाणामन्यतमं वरं प्रार्थय— इति प्रवाहणवचनम् ७६४
मानुषवरा ममापि सन्ति, दैववरप्रदानेन स्वप्रतिज्ञा रक्षणीया इति गौतमवचनानन्तरं मत्तः शिष्यत्वेन विद्यामाप्तुमिच्छ— इति प्रवाहणेनोक्तः गौतमः उपैमि शिष्यत्वेन—इति उपगमनकीर्तनमात्रेणैव उवास— इति कथनम् ... ७६५
पीडितगौतमक्षमापनपुरःसरं वक्ष्यामीति प्रवाहणवचनम् ७६६
पञ्चाग्निविद्योपदेशः ... ७६७
मृतस्य अग्नये हरणादेः कथनम् .... ७७५
पञ्चाग्निविदामुत्तरमार्गेण गतेः प्रतिपादनम् ... ७७६
पञ्चाग्निविद्यारहितानां केवलकर्मिणां दक्षिणमार्गकथनम् ७८०
विद्याकर्मरहितानां तृतीयस्थानवर्णनम् ... ७८३

**तृतीयं ब्राह्मणम्** ... ७८५—७९५

प्राणोपासकस्य महत्त्वप्राप्तये मन्थाख्यकर्मविधानम् ... ७८५

**चतुर्थं ब्राह्मणम्** ... ७९६—८१३

प्राणदर्शिनः श्रीमन्थं कृतवतः पुत्रमन्थविधानम् ... ७९६

मैथुनकर्मणि वाजपेयत्वसंपादनकथनम् ... ७९७

वाजपेयत्वसंपादनेन पशुकर्म कुर्वतः फलकथनपूर्वकमविदुषः प्रत्यवायप्रदर्शनम् ... ७९७

अविदुषामतिगर्हितमिदं कर्म— इत्यत्राचार्यपरम्परासंमतिकथनम् ... ७९८

सुप्तस्य जाग्रतो वा रेतःस्खलने प्रायश्चित्तविधानम् . ७९९

उदके छायादर्शने प्रायश्चित्तविधानम् ... ८००

भार्यावशीकरणोपायकथनम् ... ८०१

पुरुषद्वेषिण्याः प्रीतिसंपादनप्रक्रिया, गर्भिणी मा भूदितीच्छायां कर्तव्यप्रतिपादनं च ... ८०२

गर्भिणी भवत्विति इच्छायां कर्तव्यकथनम्, जायाजाराभिचारकर्मकथनं च ... ८०३

रजस्वलानियमकथनम् ८०४

शुक्लत्वादिविशिष्टपुत्रेच्छायां कर्तव्यकथनम् ... ८०५

पण्डितत्वादिविशिष्टदुहित्रिच्छायां कर्तव्यकथनम् .. ८०६

उक्तपुत्राद्यर्थक्रियासाधनीभूतौदनपाकादीनां कालादिनियमकथनम् ... ८०७

प्रसवकाले सुखप्रसवार्थोपायकथनं जातकथनं च ... ८१०

दधिमध्वादिप्राशनं नामकरणं च ... ८११

पुत्रस्य मात्रे प्रदानपूर्वकं स्तनप्रयच्छनमन्त्रोपपादनं मात्र-भिमन्त्रणमन्त्रोपपादनं यथोक्तपुत्रसंपन्नपितुः पुत्रस्य च स्तुतिः ... ८१२

**पञ्चमं ब्राह्मणम्** ... ८१४--८१७

प्रतिपादितानामर्थानां स्तुत्यर्थं सर्वेषामपि काण्डानामाचार्यपरम्परोपदेशः ... ८१४



# ॥ बृहदारण्यकोपनिषत् ॥

श्रीमच्छंकरभगवत्पादविरचितेन
भाष्येण सहिता ।



ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्यासंप्रदायकर्तृभ्यो
वंशऋषिभ्यो नमो गुरुभ्यः ।



'उषा वा अश्वस्य' इत्येवमाद्या वाजसनेयिब्राह्मणोपनिषत् । तस्या इयमल्पग्रन्था वृत्तिः आरभ्यते, संसारव्याविवृत्सुभ्यः संसारहेतुनिवृत्तिसाधनब्रह्मात्मैकत्वविद्याप्रतिपत्तये । सेयं ब्रह्मविद्या उपनिषच्छब्दवाच्या, तत्पराणां सहेतोः संसारस्यात्यन्तावसादनात्; उपनिपूर्वस्य सदेस्तदर्थत्वात् । तादर्थ्याद्ग्रन्थोऽप्युपनिषदुच्यते ।

सेयं षडध्यायी अरण्येऽनूच्यमानत्वादारण्यकम् ; बृहत्त्वात्परिमाणतो बृहदारण्यकम् ॥

तस्यास्य कर्मकाण्डेनसंबन्धोऽभिधीयते । सर्वोऽप्ययं वेदः प्रत्यक्षानुमानाभ्यामनवगतेष्टानिष्टप्राप्तिपरिहारोपायप्रकाशनपरः, सर्वपुरुषाणां निसर्गत एव तत्प्राप्तिपरिहारयोरिष्टत्वात् । दृष्टविषये चेष्टानिष्टप्राप्तिपरिहारोपायज्ञानस्य प्रत्यक्षानुमानाभ्यामेव सिद्धत्वात् नागमान्वेषणा । न चासति जन्मान्तरसंबन्ध्यात्मास्तित्वविज्ञाने जन्मान्तरेष्टानिष्टप्राप्तिपरिहारेच्छा स्यात्; स्वभाववादिदर्शनात् । तस्माज्जन्मान्तरसंबन्ध्यात्मास्तित्वे जन्मान्तरेष्टानिष्टप्राप्तिपरिहारोपायविशेषे च शास्त्रं प्रवर्तते । 'येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके' इत्युपक्रम्य 'अस्तीत्येवोपलब्धव्यः' इत्येवमादिनिर्णयदर्शनात्; 'यथा च मरणं प्राप्य' इत्युपक्रम्य 'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्' इति च; 'स्वयं ज्योतिः' इत्युपक्रम्य 'तं विद्याकर्मणी समन्वारभेते' 'पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन' इति च; 'ज्ञपयिष्यामि' इत्युपक्रम्य 'विज्ञानमयः' इति च— व्यतिरिक्तात्मास्तित्वम् । तत्प्रत्यक्षविषयमेवेति चेत्, न; वादिविप्रतिपत्तिदर्शनात् । न हि

देहान्तरसंबन्धिन आत्मनः प्रत्यक्षेणास्तित्वविज्ञाने लोकायतिका बौद्धाश्च नः प्रतिकूलाः स्युः नास्त्यात्मेति वदन्तः । न हि घटादौ प्रत्यक्षविषये कश्चिद्विप्रतिपद्यते, नास्ति घट इति । स्थाण्वादौ पुरुषादिदर्शनान्नेति चेत्, न; निरूपितेऽभावात् । न हि प्रत्यक्षेण निरूपिते स्थाण्वादौ विप्रतिपत्तिर्भवति । वैनाशिकास्त्वहमिति प्रत्यये जायमानेऽपि देहान्तरव्यतिरिक्तस्य नास्तित्वमेव प्रतिजानते । तस्मात्प्रत्यक्षविषयवैलक्षण्यात् प्रत्यक्षान्नात्मास्तित्वसिद्धिः । तथानुमानादपि । श्रुत्या आत्मास्तित्वे लिङ्गस्य दर्शितत्वात् लिङ्गस्य च प्रत्यक्षविषयत्वात् नेति चेत्, न; जन्मान्तरसंबन्धस्याग्रहणात् । आगमेन त्वात्मास्तित्वेऽवगते वेदप्रदर्शितलौकिकलिङ्गविशेषैश्च, तदनुसारिणो मीमांसकास्तार्किकाश्चाहंप्रत्ययलिङ्गानि च वैदिकान्येव स्वमतिप्रभवाणीति कल्पयन्तो वदन्ति प्रत्यक्षश्चानुमेयश्चात्मेति ॥

सर्वथाप्यस्त्यात्मा देहान्तरसंबन्धीत्येवं प्रतिपत्तुर्देहान्तरगतेष्टानिष्टप्राप्तिपरिहारोपायविशेषार्थिनस्तद्विशेषज्ञापनाय कर्मकाण्डमारब्धम् । न त्वात्मनः इष्टानिष्टप्राप्तिपरिहारेच्छाकारणमात्मविषयमज्ञानं कर्तृभोक्तृस्वरूपाभिमानलक्षणं तद्विपरीतब्रह्मात्मस्वरूपविज्ञानेनापनीतम् । यावद्धि तन्नापनीयते, तावदयं कर्मफलरागद्वेषादिस्वाभाविकदोषप्रयुक्तः शास्त्रविहितप्रतिषि-

द्धातिक्रमेणापि प्रवर्तमानो मनोवाक्कायैर्दृष्टादृष्टानिष्टसाधनान्यधर्मसंज्ञकानि कर्माण्युपचिनोति बाहुल्येन, स्वाभाविकदोषबलीयस्त्वात् । ततः स्थावरान्ताधोगतिः । कदाचिच्छास्त्रकृतसंस्कारबलीयस्त्वम् । ततो मनआदिभिरिष्टसाधनं बाहुल्येनोपचिनोति धर्माख्यम् । तद्द्विविधम्— ज्ञानपूर्वकं केवलं च । तत्र केवलं पितृलोकादिप्राप्तिफलम् । ज्ञानपूर्वकं देवलोकादिब्रह्मलोकान्तप्राप्तिफलम् । तथा च शास्त्रम्— 'आत्मयाजी श्रेयान्देवयाजिनः' इत्यादि । स्मृतिश्च 'द्विविधं कर्म वैदिकम्' इत्याद्या । साम्ये च धर्माधर्मयोर्मनुष्यत्वप्राप्तिः । एवं ब्रह्माद्या स्थावरान्ता स्वाभाविकाविद्यादिदोषवती धर्माधर्मसाधनकृता संसारगतिर्नामरूपकर्माश्रया । तदेवेदं व्याकृतं साध्यसाधनरूपं जगत् प्रागुत्पत्तेरव्याकृतमासीत् । स एष बीजाङ्कुरादिवदविद्याकृतः संसारः आत्मनि क्रियाकारकफलाध्यारोपलक्षणोऽनादिरनन्तोऽनर्थ इत्येतस्माद्विरक्तस्याविद्यानिवृत्तये तद्विपरीतब्रह्मविद्याप्रतिपत्त्यर्थोपनिषदारभ्यते ॥

अस्य त्वश्वमेधकर्मसंबन्धिनो विज्ञानस्य प्रयोजनम्——येषामश्वमेधे नाधिकारः, तेषामस्मादेव विज्ञानात्तत्फलप्राप्तिः, विद्यया वा कर्मणा वा, 'तद्धैतल्लोकजिदेव' इत्येवमादिश्रुतिभ्यः । कर्मविषयत्वमेव विज्ञानस्येति चेत्, न; 'योऽश्वमे-

धेन यजते य उ चैनमेवं वेद' इति विकल्पश्रुतेः । विद्याप्रकरणे चाम्नानात्, कर्मान्तरे च संपादनदर्शनात्, विज्ञानात्तत्फलप्राप्तिरस्तीत्यवगम्यते । सर्वेषां च कर्मणां परं कर्माश्वमेधः, समष्टिव्यष्टिप्राप्तिफलत्वात् । तस्य चेह ब्रह्मविद्याप्रारम्भे आम्नानं सर्वकर्मणां संसारविषयत्वप्रदर्शनार्थम् । तथा च दर्शयिष्यति फलमशनायामृत्युभावम् । न नित्यानां संसारविषयफलत्वमिति चेत्, न; सर्वकर्मफलोपसंहारश्रुतेः । सर्वं हि पत्नीसंबद्धं कर्म; 'जाया मे स्यादेतावान्वै कामः' इति निसर्गत एव सर्वकर्मणां काम्यत्वं दर्शयित्वा, पुत्रकर्मापरविद्यानां च 'अयं लोकः पितृलोको देवलोकः' इति फलं दर्शयित्वा, त्र्यन्नात्मकतां चान्ते उपसंहरिष्यति 'त्रयं वा इदं नाम रूपं कर्म' इति—सर्वकर्मणां फलं व्याकृतं संसार एवेति । इदमेव त्रयं प्रागुत्पत्तेस्तर्ह्यव्याकृतमासीत् । तदेव पुनः सर्वप्राणिकर्मवशाद्व्याक्रियते बीजादिव वृक्षः । सोऽयं व्याकृताव्याकृतरूपः संसारोऽविद्याविषयः क्रियाकारकफलात्मकतयात्मरूपत्वेनाध्यारोपितोऽविद्ययैव मूर्तामूर्ततद्वासनात्मकः । अतो विलक्षणोऽनामरूपकर्मात्मकोऽद्वयो नित्यशुद्धबुद्धमुक्तस्वभावोऽपि क्रियाकारकफलभेदादिविपर्ययेणावभासते । अतोऽस्मात्क्रियाकारकफलभेदस्वरूपात् 'एतावदिदम्' इति साध्य-

साधनरूपाद्विरक्तस्य कामादिदोषकर्मबीजभूताविद्यानिवृत्तये रज्ज्वामिव सर्पाज्ञानापनयाय ब्रह्मविद्या आरभ्यते ॥

तत्र तावदश्वमेधविज्ञानाय 'उषा वा अश्वस्य' इत्यादि । तत्राश्वविषयमेव दर्शनमुच्यते, प्राधान्यादश्वस्य । प्राधान्यं च तन्नामाङ्कितत्वात्क्रतोः प्राजापत्यत्वाच्च ॥

**ॐ । उषा वा अश्वस्य मेध्यस्य शिरः । सूर्यश्चक्षुर्वातः प्राणो व्यात्तमग्निर्वैश्वानरः संवत्सर आत्माश्वस्य मेध्यस्य । द्यौः पृष्ठमन्तरिक्षमुदरं पृथिवी पाजस्यं दिशः पार्श्वे अवान्तरदिशः पर्शव ऋतवोऽङ्गानि मासाश्चार्धमासाश्च पर्वाण्यहोरात्राणि प्रतिष्ठा नक्षत्राण्यस्थीनि नभो मांसानि । ऊवध्यँ सिकताः सिन्धवो गुदा यकृच्च क्लोमानश्च पर्वता ओषधयश्च वनस्पतयश्च लोमान्युद्यन्पूर्वार्धो निम्लोचञ्जघनार्धो यद्विजृम्भते तद्विद्योतते यद्विधूनुते तत्स्तनयति यन्मेहति तद्वर्षति वागेवास्य वाक् ॥ १ ॥**

उषा इति, ब्राह्मो मुहूर्तः उषाः; वैशब्दः स्मारणार्थः, प्रसिद्धं कालं स्मारयति; शिरः, प्राधान्यात्; शिरश्च प्रधानं शरीरावयवानाम्; अश्वस्य, मेध्यस्य मेधार्हस्य यज्ञियस्य, उषाः शिर इति संबन्धः। कर्माङ्गस्य पशोः संस्कर्तव्यत्वात्कालादिदृष्टयः शिरआदिषु क्षिप्यन्ते; प्राजापत्यत्वं च प्रजापतिदृष्ट्यध्यारोपणात्; काललोकदेवतात्वाध्यारोपणं च प्रजापतित्वकरणं पशोः; एवंरूपो हि प्रजापतिः; विष्णुत्वादिकरणमिव प्रतिमादौ। सूर्यश्चक्षुः, शिरसोऽनन्तरत्वात्सूर्याधिदैवतत्वाच्च; वातः प्राणः, वायुस्वाभाव्यात्; व्यात्तं विवृतं मुखम् अग्निर्वैश्वानरः; वैश्वानर इत्यग्नेर्विशेषणम्; वैश्वानरो नामाग्निर्विवृतं मुखमित्यर्थः, मुखस्याग्निदैवतत्वात्; संवत्सर आत्मा; संवत्सरो द्वादशमासस्त्रयोदशमासो वा; आत्मा शरीरम्; कालावयवानां च संवत्सरः शरीरम्; शरीरं चात्मा, 'मध्यं ह्येषामङ्गानामात्मा' इति श्रुतेः; अश्वस्य मेध्यस्येति सर्वत्रानुषङ्गार्थं पुनर्वचनम्। द्यौः पृष्ठम्, ऊर्ध्वत्वसामान्यात्; अन्तरिक्षमुदरम्, सुषिरत्वसामान्यात्; पृथिवी पाजस्यं पादस्यम्, पाजस्यमिति वर्णव्यत्ययेन, पादासनस्थानमित्यर्थः; दिशश्चतस्रोऽपि पार्श्वे, पार्श्वेन दिशां संबन्धात्; पार्श्वयोर्दिशां च संख्यावैषम्यादयुक्तमिति चेत्, न; सर्वमुखत्वोप-

पत्तेरश्वस्य पार्श्वाभ्यामेव सर्वदिशां संबन्धाददोषः; अवान्तरदिश आग्नेय्याद्याः पर्शवः पार्श्वास्थीनि; ऋतवोऽङ्गानि, संवत्सरावयवत्वादङ्गसाधर्म्यात्; मासाश्चार्धमासाश्च पर्वाणि संधयः, संधिसामान्यात्; अहोरात्राणि प्रतिष्ठाः; बहुवचनात्प्राजापत्यदैवपित्र्यमानुषाणि; प्रतिष्ठाः पादाः, प्रतितिष्ठत्येतैरिति; अहोरात्रैर्हि कालात्मा प्रतितिष्ठति, अश्वश्च पादैः; नक्षत्राण्यस्थीनि, शुक्लत्वसामान्यात्; नभो नभःस्था मेघाः, अन्तरिक्षस्योदरत्वोक्तेः; मांसानि, उदकरुधिरसेचनसामान्यात्। ऊवध्यम् उदरस्थमर्धजीर्णमशनं सिकताः, विश्लिष्टावयवत्वसामान्यात्; सिन्धवः स्यन्दनसामान्यात् नद्यः गुदा नाड्यः, बहुवचनाच्च; यकृच्च क्लोमानश्च हृदयस्याधस्ताद्दक्षिणोत्तरौ मांसखण्डौ; क्लोमान इति नित्यं बहुवचनमेकस्मिन्नेव; पर्वताः, काठिन्यादुच्छ्रितत्वाच्च; ओषधयश्च क्षुद्राः स्थावराः, वनस्पतयो महान्तः, लोमानि केशाश्च यथासंभवम्; उद्यन्नुद्गच्छन्भवति सविता आ मध्याह्नात् अश्वस्य पूर्वार्धः नाभेरूर्ध्वमित्यर्थः; निम्लोचन्नस्तं यन् आ मध्याह्नात् जघनार्धोऽपरार्धः, पूर्वापरत्वसाधर्म्यात्; यद्विजृम्भते गात्राणि विनामयति विक्षिपति, तद्विद्योतते विद्योतनम्, मुखघनविदारणसामान्यात्; यद्विधूनुते गात्राणि कम्पयति, तत्स्तनयति,

गर्जनशब्दसामान्यात्; यन्मेहति मूत्रं करोत्यश्वः, तद्वर्षति वर्षणं तत्, सेचनसामान्यात्; वागेव शब्द एव अस्याश्वस्य वागिति, नात्र कल्पनेत्यर्थः ॥

अहर्वा अश्वं पुरस्तान्महिमान्वजायत तस्य पूर्वे समुद्रे योनी रात्रिरेनं पश्चान्महिमान्वजायत तस्यापरे समुद्रे योनिरेतौ वा अश्वं महिमानावभितः संबभूवतुः । हयो भूत्वा देवानवहद्वाजी गन्धर्वानर्वासुरानश्वो मनुष्यान्समुद्र एवास्य बन्धुः समुद्रो योनिः ॥ २ ॥

इति प्रथमाध्यायस्य प्रथमं ब्राह्मणम् ॥

अहर्वा इति, सौवर्णराजतौ महिमाख्यौ ग्रहावश्वस्याग्रतः पृष्ठतश्च स्थाप्येते, तद्विषयमिदं दर्शनम् । अहः सौवर्णो ग्रहः, दीप्तिसामान्याद्वै । अहरश्वं पुरस्तान्महिमान्वजायतेति कथम्? अश्वस्य प्रजापतित्वात्; प्रजापतिर्ह्यादित्यादिलक्षणोऽह्ना लक्ष्यते; अश्वं लक्षयित्वाजायत सौवर्णो महिमा ग्रहः, वृक्षमनु विद्योतते विद्युदिति यद्वत् । तस्य ग्रहस्य पूर्वे पूर्वः समुद्रे समुद्रः योनिः, विभक्तिव्यत्ययेन; योनिरित्या-

सादनस्थानम् । तथा रात्री राजतो ग्रहः, वर्णसामान्याज्जघन्यत्वसामान्याद्वा । एनमश्वं पश्चात्पृष्ठतो महिमा अन्वजायत; तस्यापरे समुद्रे योनिः । महिमा महत्त्वात् । अश्वस्य हि विभूतिरेषा, यत्सौवर्णो राजतश्च ग्रहावुभयतः स्थाप्येते । तावेतौ वै महिमानौ महिमाख्यौ ग्रहौ, अश्वमभितः संबभूवतुः उक्तलक्षणावेव संभूतौ । इत्थमसावश्वो महत्त्वयुक्त इति पुनर्वचनं स्तुत्यर्थम् । तथा च हयो भूत्वेत्यादि स्तुत्यर्थमेव । हयो हिनोतेर्गतिकर्मणः, विशिष्टगतिरित्यर्थः; जातिविशेषो वा; देवानवहत् देवत्वमगमयत्, प्रजापतित्वात्; देवानां वा वोढाभवत्; ननु निन्दैव वाहनत्वम्; नैष दोषः; वाहनत्वं स्वाभाविकमश्वस्य, स्वाभाविकत्वादुच्छ्रायप्राप्तिर्देवादिसंबन्धोऽश्वस्य इति स्तुतिरेवैषा । तथा वाज्यादयो जातिविशेषाः; वाजी भूत्वा गन्धर्वानवहदित्यनुषङ्गः; तथार्वा भूत्वासुरान्; अश्वो भूत्वा मनुष्यान् । समुद्र एवेति परमात्मा, बन्धुर्बन्धनम्, बध्यतेऽस्मिन्निति; समुद्रो योनिः कारणमुत्पत्तिं प्रति; एवमसौ शुद्धयोनिः शुद्धस्थितिरिति स्तूयते; 'अप्सुयोनिर्वा अश्वः' इति श्रुतेः प्रसिद्ध एव वा समुद्रो योनिः ॥

**इति प्रथमाध्यायस्य प्रथमं ब्राह्मणम् ॥**

## द्वितीयं ब्राह्मणम् ॥

——*——

नैवेह किंचनाग्र आसीन्मृत्युनैवेदमावृतमासीदशनाययाशनाया हि मृत्युस्तन्मनोऽकुरुतात्मन्वी स्यामिति । सोऽर्चन्नचरत्तस्यार्चत आपोऽजायन्तार्चते वै मे कमभूदिति तदेवार्कस्यार्कत्वं कँ ह वा अस्मै भवति य एवमेतदर्कस्यार्कत्वं वेद ॥ १ ॥

अथाग्नेरश्वमेधोपयोगिकस्योत्पत्तिरुच्यते । तद्विषयदर्शनविवक्षयैवोत्पत्तिः स्तुत्यर्था । नैवेह किंचनाग्र आसीत् इह संसारमण्डले, किंचन किंचिदपि नामरूपप्रविभक्तविशेषम्, नैवासीत् न बभूव, अग्रे प्रागुत्पत्तेर्मनआदेः ॥

किं शून्यमेव बभूव? शून्यमेव स्यात्; 'नैवेह किंचन' इति श्रुतेः, न कार्यं कारणं वासीत्; उत्पत्तेश्च; उत्पद्यते हि घटः; अतः प्रागुत्पत्तेर्घटस्य नास्तित्वम् । ननु कारणस्य न नास्तित्वम्, मृत्पिण्डादिदर्शनात्; यन्नोपलभ्यते तस्यैव ना-

